**( सू० ४९ ) तदाभासा अनौचित्यप्रवर्तिताः ।**

**तदाभासा रसाभासा भावाभासाश्च ।**

---

नुभावव्यङ्ग्यत्वकृतचारुत्वेनापाततः प्राधान्यमिति भावः । पर्यन्ते तु रसस्यैव प्राधान्यम् । मध्यमव्यङ्ग्यमादायैव ध्वनित्वादिव्यवस्थितेरिति बोध्यमित्युद्द्योते स्पष्टम् । नन्वत्र शठेन विधिनेतिवत् ‘ त्वामालिख्य ’ इत्यादौ ( ३६ पद्ये ) क्रूरपदेनासूया प्राधान्येन व्यज्यते इति तत्रापि भावध्वनित्वमेव । तत्कथं विप्रलम्भोदाहरणमिति चेन्न । तत्र ‘ दृष्टिरालुप्यते मे ’ इत्यन्तेन विप्रलम्भावगमेऽनन्तरं प्रतीयमानायां असूयाया विप्रलम्भाङ्गत्वस्यैवौचित्यात् । अत्र तु यावत्तावत्पदाभ्यामेकवाक्यताभ्युपगमेन विशेषादित्याहुः ॥

रसाभासं भावाभासं च लक्षयति **तदाभासा इति** । अनौचित्येन प्रवर्तिताः तदाभासा रसाभासा भावाभासाश्चेति सूत्रार्थः । तत्पदेन रसभावयोः परामर्शो न तु संनिहितत्वेन भावस्यैवेत्याह **रसाभासा भावाभासाश्चेति** । अनौचित्यं हि शास्त्रलोकातिक्रमात् प्रतिषिद्धविषयकत्वादिरूपं सामाजिकसंवेद्यम् । तदुक्तमुद्द्योतादौ । “ अनौचित्यं च सहृदयव्यवहारतो ज्ञेयम् यत्र तेषामनुचितमिति धीः । तच्च शृङ्गारे बहुविषयत्वेन उपनायकादिगतत्वेन नायकनायिकान्यतरमात्रविषयत्वेन गुरुजनगतत्वेन तिर्यगादिगतत्वादिना च नानैव । तदुक्तम् ‘ उपनायकसंस्थायां मुनिगुरुपत्नीगतायां च । बहुनायकविषयायां रतौ तथानुभयनिष्ठायाम् ॥ आभासत्वं कथितं तथैव [ च ] तिर्यगादिविषयतायाम् । ’ इति ” इति । एवं वीरादावपि ज्ञेयम् । तथाहि । गुर्वाद्यालम्बनतया हासस्य वीतरागाद्याश्रयतया करुणस्य पित्राद्यालम्बनतया रौद्रवीरयोः वीरगतत्वेन भयानकस्य यज्ञीयपशुवसाद्यालम्बनतया बीभत्सस्य ऐन्द्रजालिकाद्यालम्बनतयाद्भुतस्य चण्डालादिगतत्वेन शान्तस्य चाभासत्वं बोध्यम् । एकविषया रतिरेव नेति तु प्रलापः । रसाभासस्य भावाङ्गतायां ‘ बन्दीकृत्य नृप द्विषां युवतयः०’ इति ११९ उदाहरणस्य वक्ष्यमाणत्वात् । तत्र सैनिकगतैव रतिः न तु बन्दीकृतयुवतिष्विति बोध्यमिति प्रदीपप्रभयोः स्पष्टम् । उक्तं च प्रतापरुद्रेऽपि “ एकत्रैवानुरागश्च तिर्यङ्म्लेच्छगतोऽपि च । योषितो बहुसक्तिश्चेद्रसाभासस्त्रिधा मतः ॥ ” इति ॥

सुधासागरे तु “ अनौचित्येन प्रकर्षविरोधिना रूपेणेत्यर्थः । तच्चैकाश्रयत्वे तिर्यगादिविषयतायां बहुविषयत्वे व्यभिचारिणामाभासाङ्गतायां वा द्रष्टव्यम् इति प्रदीपकाराः । इदं च परिगणनं संप्रदायानुसरणमात्रम् । ‘ हीनपात्रेषु तिर्यक्षु नायकप्रतियोगिषु । गौणेषु च पदार्थेषु तदाभासं विजानते ॥ ’ इति सरस्वतीकण्ठाभरणादिविसंवादात् । वस्तुतस्त्वनौचित्यमात्रमेवामीषां मनसाभासताप्रयोजकम् । तिर्यगादौ तु अनौचित्याभावाद्रस एव । न तदाभासः । अत एव वृत्तिकारो ‘ ग्रीवाभङ्गाभिरामम् ’ इत्यादौ ( ४५ उदाहरणे ) तिर्यग्विषयतया भयानकं ‘ मित्रे क्वापि गते ’ इत्यादौ ( ३३४ उदाहरणे ) तिर्यग्विषयतया विप्रलम्भं चोदाजहार । अत एवान्यत्रानेककामुकविषयरतेराभासत्वेऽपि पाण्डवेषु द्रौपद्याः न तथा। स्वकान्तानामपि शोकाद्यवस्थायां रतिवर्णनमाभासरूपमेव अनौचित्येन प्रवर्तितत्वादित्यवसेयम् । यद्यपि काव्यनाट्यश्रवणदर्शनाभ्यां विभावादिसाधारण्यज्ञाने सति सामाजिकानां स्वीयस्थायिव्यक्तिरित्य-

---

१ आदिशब्देनागम्याविषयत्वसंग्रहः ॥ २ एकविषया एकमात्राश्रया ॥ ३ प्रकर्षविरोधित्वं च ॥ ४ एकाश्रयत्वे नायकनायिकान्यतरमात्राश्रयत्वे । रतेरित्यर्थः ॥ ५ व्यभिचारिणां तु रसाङ्गतायामाभासत्वम् ॥ ६ वा शब्दः कुत्रचित्प्रमादल्लिखित एवेति प्रभायां स्पष्टम् ॥

तत्र रसाभासो यथा

स्तुमः कं वामाक्षि क्षणमपि विना यं न रमसे
विलेभे कः प्राणान् रणमखमुखे यं मृगयसे ।
सुलग्ने को जातः शशिमुखि यमालिङ्गसि बलात्
तपःश्रीः कस्यैषा मदननगरि ध्यायसि तु यम् ॥ ४८ ॥

अत्रानेककामुकविषयमभिलाषं तस्याः स्तुम इत्याद्यनुगतं बहुव्यापारोपादानं व्यनक्ति ।

---

लौकिकरसः स्वतो नाभासः । तथापि असाधारण्यप्रतीतिप्रयोजककाव्यवर्णिते यत्रानौचित्यप्रतिसंधानं तत्र व्यङ्ग्ये रसेऽप्याभासव्यवहार इति ध्येयम् " इत्येवं व्याख्यातम् ॥

**स्तुम इति** । वारयोषितं प्रति कस्यचित्कामुकस्य चाटूक्तिरियमिति वैद्यनाथः । वयं त्वनौचित्यापादनाय परकीयां प्रति कामुकोक्तिरियमिति ब्रूम इति सुधासागरकाराः । हे वामाक्षि वामं सुन्दरं ( जितेन्द्रियाणामपि वशीकरणात् ) विरुद्धं वा अक्षि यस्याः सा तथाविधे तं कं पुरुषं स्तुमः यं विना क्षणमपि न रमसे क्रीडसि हृष्यसीति यावत् । तथा यं मृगयसे अन्विष्यसि कोऽसौ रणः संग्रामः स एव मखो यागः ( त्वत्कर्तृकान्वेषणरूपस्वर्गफलकत्वात् ) तस्य मुखे पुरतः यः प्राणान् विलेभे दत्तवान् अर्थाज्जन्मान्तरे । हे शशिमुखि चन्द्रवदने यं बलात् आलिङ्गसि सः कः सुलग्ने शोभनजीवादिग्रहाधिष्ठिते लग्ने राश्युदये जात उत्पन्नः । हे मदननगरि मदनस्य नगरि राजधानि अत्र स्थितस्यैव मदनस्य प्रभुत्वान्मदननगरीत्वम् यं तु ध्यायसि तस्य कस्यैषा त्वत्कर्तृकध्यानरूपा तपःश्रीः तपोजन्या संपत्तिरित्यर्थः । अत्र शशिमुखीत्यनेनाङ्गीकृतापरित्यागस्य युक्तता ध्वन्यते । शशिनाप्यङ्गीकृतशशापरित्यागात् । नगरीत्वारोपेणानेकविषयकमदनाश्रयत्वसूचनम् । तस्या अनेकाश्रयस्वभावत्वात् । शिखरिणी छन्दः । लक्षणमुक्तं प्राक् ( ७५ पृष्ठे ) ॥

अत्र रसस्याभासत्वं दर्शयति **अत्रानेकेति** । अत्र ' तस्याः ' इति मध्यमणिन्यायेनोभयत्राप्यन्वेति । तथा च तस्याः वामाक्ष्याः ' स्तुमः ' इत्यादिषु अनुगतं संबद्धं बहुषु ( बहुकामुकविषये ) ये व्यापाराः रमणान्वेषणालिङ्गनध्यानरूपास्तेषामुपादानं ग्रहणं ( कर्तृ ) तस्याः अनेके ये कामुकाः जारास्तद्विषयकमभिलाषं ( कर्म ) व्यनक्ति व्यञ्जयतीत्यन्वयः । अभिलाषेण चाभिव्यक्तेन बहुविषया रतिरभिव्यज्यते इत्यर्थात्सिद्धम् । तदुक्तं प्रदीपोद्द्योतादिषु । अत्र बहुषु व्यापारोपादानेन बहुविषया रतिर्व्यज्यते । नन्वत्र व्यापारस्य बहुविषयत्वमसिद्धम् । एकत्रापि तादृश ( अनेकार्थक ) व्यापारसंभवादिति चेत् अत्र ब्रूमः । तुशब्देन[1] व्यवच्छेदार्थकेन व्यापारस्यानेकविषयकत्वं लभ्यते । एवमेकत्र भेदाभिप्रायेऽवगतेऽन्यत्रापि तथैवावगम्यते । " एकत्र निर्णीतः शास्त्रार्थोऽन्यत्रापि तथा " इति न्यायात् । अथवा वर्तमानरमणान्वेषणालिङ्गनध्यानरूपव्यापाराणां नैकस्मिन् संभवः । वर्तमानध्यानविषये आलिङ्गनादेर्वर्तमानत्वायोगात् । बहुपदमनेकपरं वा । एवं चानेककामुकविषयत्वेन बलादालिङ्गनगम्यानुभयनिष्ठत्वेन च शास्त्रलोकातिक्रमात् रतेराभासत्वं बोध्यम् । रसानौचित्यस्य रसावगमोत्तरमेवावगमात् आभासताप्रयोजकतैव ।

---

१ तुशब्देनेति । ' यं तु ध्यायसि ' इति ध्यानकर्मीभूतस्येतरेभ्यो व्यवच्छेदप्रतीतेर्भिन्नत्वमवगम्यते । अतः सर्वेषामपि स्वरसतो भिन्नतानिर्णयोऽपि सुज्ञेयते । आभासत्वस्यावर्जनादित्यर्थः ॥

भावाभासो यथा

राकासुधाकरमुखी तरलायताक्षी
सा स्मेरयौवनतरङ्गितविभ्रमाङ्गी।
तत् किं करोमि विदधे कथमत्र मैत्रीं
तत्स्वीकृतिव्यतिकरे क इवाभ्युपायः॥ ४९॥

अत्र चिन्ता अनौचित्यप्रवर्तिता। एवमन्येऽप्युदाहार्याः॥

---

न वाच्यवाचकानौचित्यवद्रसभङ्गहेतुतेति बोध्यम्। नन्वेतावता लौकिकस्याभासत्वमागतं न तु सामाजिकनिष्ठस्यालौकिकस्येति चेन्न। साधारणीकरणोपायेन सामाजिकस्य वर्णनीयमयीभावात्सामाजिकनिष्ठरतेरप्याभासत्वमितीति॥

यत्तु कैश्चिदुक्तम् "यद्यपि बहुव्यापारोपादानस्यैकविषयत्वमपि संभवति 'हृष्टः स्वपिति गच्छति' इत्यादिषु विरुद्धक्रिययोः क्रमिकयोरपि स्थूलकालमादाय वर्तमानप्रयोगदर्शनेनाविरोधात् तथापि यं यमित्यसकृत् कर्मोपादानं व्यापारस्यानेकगतत्वमेव प्रकटयति। यद्येकविषयत्वमभिप्रेतं स्यात्तदा सकृदेव कर्मोपादानं कुर्यात्" इति तत्तुच्छम्। स्तुमो विलेभे इत्यादीनां भिन्नवाक्यस्थानाम्[1] एकविभक्त्यन्तपदोपस्थापितेनानन्वये[2] तदन्वयिनः[3] अभिन्नस्य (एकस्य) कं कः इत्यादिपदैरुपस्थापनेऽपि भिन्नकर्मपदैरेवोपस्थापनार्हणादित्यपि प्रदीपोद्द्योतादिषु स्पष्टम्॥

**राकेति**। सीतामुद्दिश्य रावणोक्तिरियम्। राकायाम् अखण्डचन्द्रायां पूर्णिमायां यः सुधाकरश्चन्द्रस्तद्वन्मुखं यस्यास्तथाविधा तरले चञ्चले आयते दीर्घे अक्षिणी यस्यास्तादृशी स्मेरम् ईषत्प्रकाशं यौवनं नवयौवनमिति यावत् तेन तरङ्गिताः तरङ्गवदुत्तरोत्तरारम्भशीलाः विभ्रमाः येषु तथाविधान्यङ्गानि यस्याः तथाभूतेति दर्शनक्रमेण मुखादिगतप्रकर्षविभावनम्। विभ्रमास्येतिपाठे विभ्रमयुक्तमुखीत्यर्थः। एतादृशी सा सीता। अस्तीति शेषः। तत् तस्मात् (अनुपेक्षणीयगुणवत्त्वात्) किं करोमि (तल्लाभाय) किमाचरामीत्यर्थः। तया सह मैत्री क्रियतां तत्राह विदधे कथमिति। अत्र अस्यां सीतायां मैत्रीं मित्रतां कथं केनोपायेन विदधे करोमि। मैत्रीकरणे न कश्चिदुपाय इत्यर्थः। एवं सति तया (मम) स्वीकृतिः ममायमिति बुद्धिविषयीकरणं तस्य व्यतिकरे संबन्धे अभ्युपायः हेतुः क इव। अत्र इवशब्दः संभावनायाम्। कः संभाव्यते न कोऽपीत्यर्थः। वसन्ततिलका छन्दः। लक्षणमुक्तं प्राक् (६८ पृष्ठे)॥

अत्र भावस्याभासत्वं दर्शयति **अत्र चिन्तेति**। **अनौचित्येति**। "आदौ वाच्यः स्त्रियो रागः पश्चात्पुंसस्तदिङ्गितैः" इति हि औचित्यम्। तद्वैपरीत्येनाननुरक्तायामनुरागोऽयुक्त इति रतेरनौचित्यप्रवर्तितत्वात्तद्व्यभिचारिभावस्य चिन्ताया अपि अनौचित्यप्रवर्तितत्वम्। व्यभिचारिभावस्य चिन्तायाः प्राधान्येनाभिव्यक्तत्वाद्भावत्वम्। उद्द्योतकारास्तु मैत्रीं कथं करोमीत्युक्त्वा मैत्र्यभावलाभादनौचित्यप्रवर्तिता चिन्तेत्याहुः॥

**अन्येऽपीति**। रसान्तरभासा भावान्तराभासाश्चेत्यर्थः। तत्र रौद्राभासो यथा "रक्तोत्फुल्लविशाललोलनयनः कम्पोत्तरङ्गो मुहुर्मुक्त्वाकर्णमपेतभीर्धृतधनुर्बाणो हरेः पश्यतः। आध्मातः कटुकोक्तिभिः स्वमसकृद्दोर्विक्रमं कीर्तयन्नंसास्फोटपटुर्युधिष्ठिरमसौ हन्तुं प्रविष्टोऽर्जुनः॥" इति। भावान्तराभासो-

---

१ भिन्नवाक्यस्थानामिति। भिन्नत्वं विजातीयत्वम्। तच्च कर्तृकर्मप्रत्ययान्तत्वेन बोध्यम्॥ २ 'अनन्वये' इति सप्तमी अर्हणेऽन्वेति॥ ३ तदन्वयिन इति। एकक्रियान्वयिनः इत्यर्थः॥

(सू० ५० ) भावस्य शान्तिरुदयः संधिः शबलता तथा ॥ ३६ ॥

क्रमेणोदाहरणम्

तस्याः सान्द्रविलेपनस्तनतटप्रश्लेषमुद्राङ्कितं[1]
किं वक्षश्चरणानतिव्यतिकरव्याजेन गोपाय्यते ।
इत्युक्ते क्व तदित्युदीर्य सहसा तत् संप्रमार्ष्टुं मया
साश्लिष्टा रभसेन तत्सुखवशात्तन्व्या च[2] तद्विस्मृतम् ॥ ५० ॥

---

दाहरणं तु " सर्वेऽपि विस्मृतिपथं विषयाः प्रयाताः विद्यापि खेदकलिता[3] विमुखीबभूव । सा केवलं हरिणशावकलोचना मे नैवापयाति हृदयादधिदेवतेव ॥ " इति भामिनीविलासपद्यम् । [4]गुरुकुले विद्याभ्याससमये तदीयकन्यालावण्यगृहीतमानसस्य अन्यस्य वा कस्यचिदतिप्रतिषिद्धगमनं स्मरतो देशान्तरगतस्येयमुक्तिः । अत्र च स्वात्मत्यागात्यागाभ्यां[5] स्रक्चन्दनादिषु विषयेषु चिरसेवितायां विद्यायां च कृतघ्नत्वम् अस्यां च ( हरिणशावकलोचनायां च ) लोकोत्तरत्वमभिव्यज्यमानं व्यतिरेकवपुः स्मृतिमेव पुष्णातीति सैव प्रधानम् । एषा[6] चानुचितविषयकत्वादनुभयनिष्ठत्वाच्च भावाभास इति रसगङ्गाधरे स्पष्टम् ॥

" भावशान्त्यादिरक्रमः " इति सूत्रतः क्रमप्राप्तं भावशान्त्यादिपदप्रतिपाद्यमाह **भावस्येति** । जातावेकवचनम् । संधौ द्वयोः । शबलतायां बहूनामावश्यकत्वात् । **शान्तिः** प्रशमः । **उदयः** उत्पत्तिः । **संधिः** एककालमेव तुल्यकक्षयोरास्वादः । समकालमेव विरुद्धयोरपि तुल्यरूपयोरास्वादो वा । **शबलता** च पूर्वपूर्वोपमर्देन परपरोदयः । तदुक्तं प्रदीपे " शबलता तु कालभेदेन निरन्तरया पूर्वपूर्वोपमर्दिनाम् " इति । एते **तथा** भावशान्त्यादिपदप्रतिपाद्या इति सूत्रार्थः । अत्र यद्यपि शान्तेर्भावान्तरोदये एव चमत्कारित्वम् उदयस्य च शान्तिपूर्वकत्वे एव चमत्कारित्वम् अत एव भावाद्भावोदयः पृथग्गणितः एवं चैतद्भेदद्वये शबलतावश्यकी तथापि तदनुभावाद्यनुपादानादस्वाद्यत्वाच्च न सा । पूर्वपूर्वोपमर्देन परोदयस्यास्वाद्यत्वे एव तत्स्वीकारात् । तदेतदुक्तं संक्षेपेण काव्यप्रदीपे " न च भावस्य शबलतायाः शान्त्युदयाभ्यामविशेषः । शान्तेरुदयस्य वा एकैकस्यास्वादे तद्भेदद्वयोपगमात् " इति । एवं शान्त्युदयावुत्पत्तिकालावच्छिन्नावेव चमत्कारिणाविति बोध्यम् । स्थायिनां त्वेते न संभवन्ति । तेषां सन्ततमविच्छेदादित्युद्द्योते स्पष्टम् ॥

तत्र भावस्य शान्तिमुदाहरति **तस्या इति** । अमरुकशतके खण्डितायाः स्वनायिकायाः कोपतच्छान्तिवृत्तान्तं वयस्यं प्रति कथयतो धृष्टनायकस्योक्तिरियम् । तस्याः सपत्न्याः ( असूयातिशयान्नामानिर्देशः ) सान्द्रं निबिडं श्रीखण्डादिविलेपनं तत्र तथाभूतस्य स्तनतटस्य तत्पर्यन्तसमदेशस्य ( अत एव ) प्रकृष्टो यः श्लेषः परिरम्भः तेन या मुद्रा स्तनाकारं विलेपनमयं चिह्नं तेनाङ्कितं तदीयत्वेन ज्ञापितमित्यर्थः । यद्वा परिरम्भेण ( स्वीयताद्योतकं ) मुद्राकारं यच्चिह्नं तद्युक्तं वक्षः वक्षःस्थलं चरणयोरानतेः प्रणामस्य यो व्यतिकरः नैरन्तर्येण पौनःपुन्येन वा संबन्धः तद्व्याजेन तन्मिषेण किं किमिति गोपाय्यते गुप्तं क्रियते इति ( तया ) उक्ते सति मया तत् मुद्राचिह्नं संप्रमार्ष्टुं विलोपयितुं सहसाप्रसाद्यैव क्व तदित्यु-

---

१ स्तनयुगेति क्वचित्पाठः ॥ २ तन्व्यापीत्यपि पाठः ॥ ३ खेदेन दुःखेन कलिता संपादिता ॥ ४ गुरुकुले गुरुगृहे ॥ ५ स्वात्मत्यागेति । विषयविद्योभयकर्तृकस्वत्यागेन विषयविद्ययोः कृतघ्नत्वम् नायिकाकर्तृकस्वीयत्यागेन चास्यां नायिकायां लोकोत्तरत्वमित्यर्थः ॥ ६ स्मृतिः ॥

अत्र कोपस्य

> एकस्मिन् शयने विपक्षरमणीनामग्रहे मुग्धया
> सद्यो मानपरिग्रहग्लपितया चाटूनि कुर्वन्नपि।
> आवेगादवधीरितः प्रियतमस्तूष्णीं स्थितस्तत्क्षणं
> मा भूत्सुप्त इवेत्यमन्दवलितग्रीवं पुनर्वीक्षितः॥ ५१॥

अत्रौत्सुक्यस्य।

> उत्सिक्तस्य तपःपराक्रमनिधेरभ्यागमादेकतः
> सत्संगप्रियता च वीररभसोत्फालश्च मां कर्षतः।
> वैदेहीपरिरम्भ एष च मुहुश्चैतन्यमामीलयन्
> आनन्दी हरिचन्दनेन्दुशिशिरस्निग्धो रुणद्ध्यन्यतः॥ ५२॥

---

दीर्य कुत्र मुद्राचिह्नमित्युक्त्वा रभसेन त्वरया सा नायिका आश्लिष्टा आलिङ्गिता तत्सुखवशात् आलिङ्गनानन्दपारवश्यात् तन्व्या च तत् मुद्राङ्कितत्वं विस्मृतमित्यर्थः। चकारेणालिङ्गनविस्मृत्योरेककालतारूपसमुच्चयालंकारो द्योत्यते। अपीति पाठेऽपि स एवार्थः। "संपर्के च व्यतिकरः प्रकारव्रातयोरपि" इति कोशः। शार्दूलविक्रीडितं छन्दः। लक्षणमुक्तं प्राक् (१८ पृष्ठे)॥

अत्र कोपरूपभावस्य शान्तावेव चमत्कारविश्रामः। न तु विद्यमानेऽपि प्रसादोदये तदनुभावाद्यनुल्लेखादिति बोध्यम्। तदेवाह अत्र **कोपस्येति**। शान्तिरिति शेषः॥

भावोदयमुदयमुदाहरति **एकस्मिन्निति**। अमरुशतके पद्यमिदम्। एकस्मिन् शयने शय्यायां विपक्षभूता रमणी सपत्नी तस्याः नामग्रहे नाममात्रग्रहणे अर्थान्नायकेन कृते सति सद्यःतत्कालमेव मानस्य परिग्रहोऽङ्गीकारः तेन ग्लपितया खिन्नया। 'कोपपराङ्मुखं ग्लपितया' इति पाठे कोपेन पराङ्मुखं यथा स्यात्तथा ग्लपितया खिन्नयेत्यर्थः। कोपपराङ्मुखग्लपितयेति पाठे कर्मधारयः। मुग्धया स्वधैर्यमजानत्या (नायिकया[1]) चाटूनि (प्रमादात्तन्नामग्रहणं न तु मे तस्यामासक्तिरित्यादीनि) प्रियभाषणानि ("अस्त्री चाटुश्चटुः श्लाघा प्रेम्णा मिथ्याभिशंसनम्" इति कोशः) कुर्वन्नपि प्रियतमः नायकः आवेगात् कोपावेशात् अवधीरितः अवज्ञातः तिरस्कृतः सन्निति यावत् तूष्णीम् आलापरहितः स्थितः प्रसादज्ञानायावहितः न तु निद्रितः तत्क्षणं तूष्णींस्थितिक्षणे एव (तत्क्षणमित्यत्र "कालाध्वनोरत्यन्तसंयोगे" इति द्वितीया। तत्क्षणादिति पाठे तूष्णींभावक्षणानन्तरमेवेत्यर्थः) स्वापस्य सर्वथा दुर्लभत्वेन सुप्त इव मा भूदित्यौत्सुक्येन अमन्दम् अतिशयितं यथा स्यात्तथा वलिता वक्रीकृता ग्रीवा यत्र तद्यथा स्यात्तथा पुनः वीक्षितानन्तरं वीक्षित इत्यर्थः। वारंवारं वीक्षित इति यावत्। शार्दूलविक्रीडितं छन्दः। लक्षणमुक्तं प्राक् (१८ पृष्ठे)॥

अत्र सुरतविषयस्यौत्सुक्यस्योदयश्चमत्करोति न तु सत्यपि कोपशान्तिः तदनुभावानुपादानादिति बोध्यम्। तदेवाह **अत्रौत्सुक्यस्येति**। उदय इति शेषः॥

भावसंधिमुदाहरति **उत्सिक्तस्येति**। महावीरचरितनाटके द्वितीयेऽङ्के सीतामालिङ्गतः श्रीरामस्य परशुरामागमने उक्तिरियम्। उत्सिक्तस्य ख्यातस्याहंकृतस्य चेत्यर्थः तपःपराक्रमयोः निधेः स्थानभूतस्य (ईदृशस्य परशुरामस्य) अभ्यागमात् आगमनेन एकतः एकस्यां दिशि सतः समीचीनस्य (परशु-

---

१ कर्तृभूतया। अस्यावधीरित इत्यत्र वीक्षित इत्यत्र चान्वयः॥

अत्रावेगहर्षयोः ।

> क्काकार्यं शशलक्ष्मणः क्क च कुलं भूयोऽपि दृश्येत सा
> दोषाणां प्रशमाय नः श्रुतमहो कोपेऽपि कान्तं मुखम् ।
> किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा
> चेतः स्वास्थ्यमुपैहि कः खलु युवा धन्योऽधरं धास्यति ॥ ५३ ॥

---

रामस्य ) सङ्गे या प्रियता प्रेम तच्च वीरस्य रभस उत्साहः तस्योत्फाल उद्रेकः वीरोचितोत्साहोद्रेक इत्यर्थः स च एतौ द्वावपि मां कर्षतः आकर्षतः । अत्र चकारद्वयं द्वयोः प्राधान्यसूचनाय । अन्यतः अन्यस्यां दिशि एषः अनुभूयमानः विदेहस्य जनकस्यापत्यं स्त्री वैदेही सीता तस्याः परिरम्भः आश्लेषः मां रुणद्धि च मुनिपार्श्वगमनं प्रतिबध्नातीत्यर्थः । चकारः पूर्वोक्ततुल्यकालत्वसूचनाय । ननु एकपरिरम्भकार्यस्य द्वाभ्यां सत्सङ्गप्रेमवीरोत्साहाभ्यां जन्यमानकार्यस्य तुल्यकालत्वं तस्य ताभ्यां तुल्यतां विनानुपपन्नमित्यतः तत्संपादके विशेषणे आह मुहुरित्यादि । मुहुः वारंवारं चैतन्यं ज्ञानम् आमीलयन् विषयान्तराद्व्यावर्तयन् हरिचन्दनं चन्दनभेदः इन्दुश्च तद्वत् शिशिरः शीतलः स चासौ स्निग्धश्च प्रेमसंवलितश्च अत एव णद्धीति युक्तं स्निग्धेन युद्धान्निवर्तनात् अत एव आनन्दी आनन्दजनक इत्यर्थः । शिशिरस्पर्श इति पाठान्तरम् । शार्दूलविक्रीडितं छन्दः । लक्षणमुक्तं प्राक् ( १८ पृष्ठे ) ॥

अत्र मुनावत्यादरणीयत्वज्ञानजन्यत्वराविशेषः पूर्वार्धगम्यः हर्षस्तूत्तरार्धगम्यः अनयोस्तुल्यकालमेवास्वाद इति तयोर्मिलनरूपः संधिः । अत्र परिरम्भकृतहर्षेण सत्सङ्गप्रियतोत्साहोभयकृतत्वादावेगस्तुल्य इति बोध्यमित्युद्द्योते स्पष्टम् । तदेवाह **अत्रावेगहर्षयोरिति** । संधिरिति शेषः । आवेगस्त्वराविशेषः ॥

भावशबलतामुदाहरति **क्काकार्यमिति** । विक्रमोर्वशीये चतुर्थेऽङ्के उर्वशीं दृष्ट्वा पुरूरवस उक्तिरियमिति जयन्तमहेश्वरनागोजीभट्टादयः । यद्यपीदं पद्यमस्मदुपलब्धहस्तलिखितपुस्तकेषु नोपलभ्यते तथापि १८७९ ख्रिस्ताब्देऽङ्किते पुस्तके १२२ पृष्ठेऽधिकपाठरूपेणोपलभ्यत एव । एतेन शुक्रकन्यां देवयानीं दृष्टवतो राज्ञो ययातेरियमुक्तिरिति वदन्तः श्रीवत्सलाञ्छनकमलाकरवैद्यनाथभीमसेनादयः प्रत्युक्ताः । अकार्यं मुनिकन्यायामासक्तिरूपं क्क शशो मृगभेदः लक्ष्म चिह्नं यस्य तस्य शशलक्ष्मणः चन्द्रस्य कुलं च क्क । क्कद्वयेन ज्ञानद्वयस्य सहानवस्थानप्रतिपत्तिः । तेनात्यन्तानौचित्यं व्यज्यते । यद्वा । क्कद्वयेनोभयोरत्यन्तवैधर्म्याद्विषमालंकारो ध्वन्यते । अत्र शान्तसंचारिवितर्कावगमः । अत्र शशलक्ष्मण इत्यनुचितम् ‘ सुधांशोः ’ इति तूचितम् । भूयोऽपि पुनरपि सा अद्भुतसौन्दर्या उर्वशी दृश्येत कथं दृग्गोचरा भवेत् । अपिना संभावनौत्कट्यं सूच्यते । अत्र व्यङ्ग्येन शृङ्गारसंचार्यौत्सुक्येन शान्तसंचारिवितर्कबाधनम् । नः अस्माकं श्रुतं शास्त्रश्रवणं दोषाणां प्रमादावेशादीनां प्रशमाय आत्यन्तिकनाशाय । अत्र व्यङ्ग्यया शान्तसंचारिण्या मत्या पूर्वौत्सुक्यबाधनम् । अहो आश्चर्यम् कोपेऽपि मुखम् ( अर्थात्तस्याः ) कान्तं मनोहरम् । अत्र व्यङ्ग्येन शृङ्गारसंचारिणा स्मरणेन पूर्वोक्तमतिबाधनम् । अपगतं कल्मषं पापकर्म येभ्यस्तादृशाः । कृते सदाचारे यद्वा कृते महात्मभिराचरिते ( पुण्यकर्मणि ) धीर्येषां ते पण्डिताः किं वक्ष्यन्ति । अत्र व्यङ्ग्यया शान्तसंचारिण्या शङ्कया पूर्वोक्तस्मरणबाधनम् । स्वप्नेऽपि अदृष्टाश्रुतापूर्वघटकेऽपि सा दुर्लभा । अत्र व्यङ्ग्येन शृङ्गारसंचारिणाभिमताप्राप्तिप्रयुक्तदैन्येन पूर्वोक्तशङ्काबाधनम् । हे चेतः स्वास्थ्यम् उपैहि उपगच्छ । अत्र व्यङ्ग्यया शान्तसंचारिण्या धृत्या पूर्वोक्तदैन्यबाधनम् । कः

**अत्र वितर्कौत्सुक्यमतिस्मरणशङ्कादैन्यधृतिचिन्तानां शबलता।**

**भावस्थितिस्तूक्ता उदाहृता च॥**

**( सू० ५१ ) मुख्ये रसेऽपि तेऽङ्गित्वं प्राप्नुवन्ति कदाचन।**

**ते भावशान्त्यादयः। अङ्गित्वं राजानुगतविवाहप्रवृत्तभृत्यवत्॥**

**( सू० ५२ ) अनुस्वानाभसंलक्ष्यक्रमव्यङ्ग्यस्थितिस्तु यः॥ ३७॥**

---

खलु धन्यो नाहमिव मन्दभाग्यः युवा तरुणः अधरं धास्यति पास्यति। अत्र व्यङ्ग्यया शृङ्गारसंचारिण्या चिन्तया पूर्वोक्तधृतिबाधनम्। एवं चात्र काव्ये पार्यन्तिकाचिन्तया शान्तोपमर्देन शृङ्गारस्य विश्रान्तिः ( पर्यवसानम् ) सा च शत्रुविजयपूर्वकराज्यलाभ इव प्रकर्षनिदानम्। शार्दूलविक्रीडितं छन्दः। लक्षणमुक्तं प्राक् ( १८ पृष्ठे )॥

अत्र पूर्वपूर्वोपमर्देन उत्तरोत्तरं प्रतीयमानं चमत्कारमादधतीति तत्स्वरूपा शबलता। तदेवाह **अत्र वितर्केत्यादि**।

ननु भावस्य शान्त्यादिवत् स्थितिरप्येकावस्था संभवति सा कथं पृथक् नोक्ता इत्यत आह **भावस्थितिरिति**। **उक्तेति**। "व्यभिचारी तथाञ्जितः" इत्यनेन ४८ सूत्रेण उक्तेत्यर्थः। **उदाहृता** 'जाने कोपपराङ्मुखी' इत्यनेन ४५ उदाहरणेन। अयं भावः। प्रशमाद्यवस्थाचतुष्करहितो भाव एव भावस्थितिः। सा पूर्वोपदर्शितेन भावेनैव गतार्थेति॥

ननु विभावादिसमूहालम्बने रसेऽङ्गतां प्राप्तस्य व्यभिचरिणो भवतु कथंचन प्राधान्यं तच्छान्त्यादीनामुदासीनानां कथं प्राधान्यमित्यत आह **मुख्ये रसेऽपीति**। अथवा ननु प्राधान्येन व्यञ्जितव्यभिचारिके स्थले नियमतो मुख्यस्य रसस्यावस्थानं तत्कथमुक्तानि भावाद्युदाहरणान्येतानि। कथं वा भावादिध्वनित्वम्। भावानां रसाङ्गत्वेन गुणीभावात् भावशान्त्यादीनामपि रसानुभावतया रसाङ्गत्वेन गुणीभावादित्यत आह मुख्ये रसेऽपीति। मुख्ये रसे सत्यपि ते भावाः शान्त्यादयश्च अङ्गित्वं प्राधान्यं प्राप्नुवन्ति कदाचन यदा ते एवाङ्गित्वेन विवक्ष्यन्ते। यद्वा। रसापेक्षया सातिशयचमत्कारे सति इति सूत्रार्थः। ते इत्यस्य व्याख्यानमाह **भावशान्त्यादय इति**। भावाश्च शान्त्यादयश्चेति द्वन्द्वः। भावस्थितिशान्तादय इति पाठः सुगमः। **अङ्गित्वमिति**। आपातत इति शेषः। रस एव पार्यन्तिकोऽस्तीति। अङ्गित्वे दृष्टान्तमाह **राजानुगतेति**। राजानुगतविवाहप्रवृत्तभृत्यन्यायेनेत्यर्थः। यथा विवाहप्रवृत्तो भृत्यो राज्ञाप्युपगम्यते तथा प्रकृतेऽपीति भावः। एवं च यत्र विभावादिव्यक्तस्थाय्यंशोद्रेककृत आस्वादस्तत्र रसध्वनित्वम्। यत्र स्वानुभावव्यक्तव्यभिचार्याद्युद्रेककृतस्तत्र भावादिध्वनित्वम्। यत्र व्यङ्ग्यीभूतमपि व्यभिचारिणमनपेक्ष्य विभावानुभावोद्रेककृतस्तत्र वस्त्वलंकारध्वनित्वमिति भावः। रससंपर्केणोद्भटस्य भावशान्त्यादेरापातत एव चमत्कारित्वम्। पर्यन्ते तु रसस्यैवेति बोध्यम्। यथा हस्त्यश्वादिभिरलंकृतो भृत्य आपाततः प्रेक्षकाणामुत्पादितविस्मयोऽपि दृष्टे राजनि एवमनुग्राहकोऽयं राजा यदुपकरणीभूय भृत्यं विवाहयतीति राजोत्कर्षे एव पर्यवसानमिति दिगित्युद्द्योते स्पष्टम्॥

इत्थमसंलक्ष्यक्रमव्यङ्ग्यं ( रसादिध्वनिं सावान्तरभेदम् ) निरूप्येदानीं संलक्ष्यक्रमव्यङ्ग्यं ध्वनिं विभजते **अनुस्वानेति**। घण्टायां बाध्यमानायां प्रधानशब्दप्रतीत्यनन्तरं यथा क्षोदीयानपरोऽनुरणनानुस्वान-

**शब्दार्थोभयशक्त्युत्थस्त्रिधा स कथितो ध्वनिः ।**

**शब्दशक्तिमूलानुरणनरूपव्यङ्ग्यः अर्थशक्तिमूलानुरणनरूपव्यङ्ग्यः उभयशक्तिमूलानुरणनरूपव्यङ्ग्यश्चेति त्रिविधः ॥ तत्र**

**अलंकारोऽथ वस्त्वेव शब्दाद्यत्रावभासते ॥ ३८ ॥**

**( सू० ५३ ) प्रधानत्वेन स ज्ञेयः शब्दाशक्त्युद्भवो द्विधा ।**

**वस्त्वेवेति अनलंकारं वस्तुमात्रम् । आद्यो यथा**

---

प्रतिध्वन्यादिपदाभिधेयः शब्दविशेषः प्रतीयते तदाभस्तत्सदृशः संलक्ष्यो ज्ञेयः क्रमः पौर्वापर्यम् ( अर्थाद्व्यञ्जकेन सह ) यस्यैवंभूतस्य व्यङ्ग्यस्य स्थितिर्यस्मिन् ( ध्वनौ काव्यभेदे ) स इत्यर्थः । यथा ध्वनिप्रतिध्वन्योः क्रमो लक्ष्यते तथा वस्त्वलंकृतितद्व्यञ्जकयोर्यत्रेति भावः । एवं भूतो यः ध्वनिः सः शब्दश्चार्थश्चोभयं च तेषां याः शक्तयः व्यञ्जनाः तत उत्तिष्ठति प्रादुर्भवति यः सः तदुत्थः तदुद्भव इति त्रिधा त्रिप्रकारः कथित इति सूत्रार्थः ॥

तदेवाह **शब्दशक्ती**त्यादि । शब्दपरिवृत्त्यसहत्वेन शब्दशक्तिमूलत्वं शब्दपरिवृत्तिसहत्वेनार्थशक्तिमूलत्वम् अवच्छेदकभेदेन[1] तदसहत्वसहत्वाभ्यां तूभयशक्तिमूलत्वमिति बोध्यम् । तदुक्तं प्रदीपे । "शब्दशक्तिमूलत्वं च एतदेव यत्तेनैव शब्देन तदर्थप्रतीतिर्न तु पर्यायान्तरेणापि । एतद्वैपरीत्यं चार्थशक्तिमूलत्वं न त्वभिधया तत्प्रतीतिरिति । एतेन अभिधाया यत्र न नियमनं तत्रैष भेदो द्रष्टव्यः । तन्नियमने तु नाभिधामूलत्वं किं तु व्यञ्जनामूलत्वमेव 'भद्रात्मनः' ( ६७ पृष्ठे ) इतिवद्भवेत् इति यत्केनचिदुक्तं तन्नादेयम् । भद्रात्मन इत्यादेरप्येतद्भेदत्वेनेष्टत्वात् । अन्यथा तस्य सर्वभेदबहिर्भावापत्तेः । किंच[2] प्रथमोदाहरणे ( उल्लास्य कालेत्यादौ १२९ पृष्ठे ) प्राकरणिकाप्राकरणिकयोरिति व्याख्यानेन द्वितीये ( तिग्मेत्यादौ १३१ पृष्ठे ) भवानित्यनेन तृतीये ( अमितइत्यादौ १३२ पृष्ठे ) असीत्यनेन प्रकरणस्याभिधानियामकस्य स्पष्टत्वात्तेषामुदाहरणत्वं विरुद्ध्येत[3] । तस्माद्यथोक्तमेव न्याय्यम् " इति ॥

शब्दशक्तिमूलानुरणनव्यङ्ग्यस्य द्वैविध्यमाह **तत्रे**त्यादि । तत्र त्रिविधेषु मध्ये । **अलंकारोऽथेति** । अथशब्दो विकल्पे । यत्र यस्मिन् ध्वनौ अलंकार उपमादिः अथवा वस्त्वेव वस्तुमात्रं शब्दात् परिवृत्त्यसहरूपात् पदात् प्रधानत्वेन प्राधान्येन अवभासते प्रकाशते स ध्वनिः शब्दशक्त्युद्भवः शब्दशक्त्युत्थः द्विधा ( अलंकारध्वनिर्वस्तुध्वनिश्चेति ) द्विप्रकार इत्यर्थः । प्रधानत्वेनेत्यनेन शब्दस्य यत्र प्राधान्यमर्थस्यापि तत्र साचिव्यमिति बोधितमिति केचित् । वस्तुतस्तु प्रधानत्वेनेत्यनेन गुणीभूतव्यङ्ग्यनिरासः ॥

ननु वस्तुत्वस्य केवलान्वयित्वात्[4] अलंकारोऽपि वस्तु तत्कथं भेद इत्यत आह **अनलंकारमिति** । अलंकारभिन्नमित्यर्थः । एवं च गोबलीवर्दन्यायेन[5] वस्त्वलंकारयोर्भेद इति भावः ॥

---

१ अंशभेदेन ॥ २ शब्दार्थयोरेकव्यङ्ग्यस्यापरव्यङ्ग्यत्वनियमादाह शब्दशक्तिमूलत्वं चेति । अवच्छेदकभेदेनोभयान्वयव्यतिरेकानुविधाने तूभयशक्तिमूलत्वं द्रष्टव्यमित्युद्द्योतः ॥ ३ उल्लास्येत्यादावभिधानियामकमस्त्येवेति तदुदाहरणासंगतिरित्याह किं चेति । भवच्छब्दस्य संबोध्यवाचित्वादप्रकृतस्य च संबोध्यत्वायोगात्प्रकृतत्वम् । एवमसीत्यपि युष्मद्योगापेक्षमिति प्रकृतत्वगमकमित्यर्थः इति प्रभा ॥ ४ केवलान्वयित्वं चात्यन्ताभावाप्रतियोगित्वम् ॥ ५ अस्य न्यायस्यार्थस्तु लौकिकन्यायमालायां द्रष्टव्यः ॥

**उल्लास्य कालकरवालमहाम्बुवाहं देवेन येन जरठोर्जितगर्जितेन ।**
**निर्वापितः सकल एव रणे रिपूणां धाराजलैस्त्रिजगति ज्वलितः प्रतापः ॥ ५४ ॥**

**अत्र वाक्यस्यासंबद्धार्थाभिधायकत्वं मा प्रसाङ्क्षीदिति प्राकरणिकाप्राकरणिकयोरुपमानोपमेयभावः कल्पनीय इत्यत्रोपमालंकारो व्यङ्ग्यः ।**

---

शब्दशक्तिमूलमलंकारध्वनिमुदाहरति **उल्लास्येति** । अत्र वाच्यपक्षे ( प्राकरणिकराजपक्षे ) येन प्रकृतेन देवेन राज्ञा जरठं कठोरम् ऊर्जितं बलवत् गर्जितं सिंहनादो यस्य तथाविधेन कालो वैरिसंहर्ता यः करवालः खड्गः तत्र यन्महत् अतिशयितम् अम्बु धाराजलं तस्य वाहः प्रवाहः ( प्रसरणं ) तम् उल्लास्य तीक्ष्णीकरणेनाधिकं कृत्वा धाराजलैः खड्गधाराकान्तिभिः ( खड्गरत्नादिकान्तौ लोके पानीयादिपदप्रयोगात् पानीयपर्यायस्य च कान्तिवाचकत्वात् ) रिपूणां शत्रूणां त्रिजगति त्रिभुवने ज्वलितः अतिप्रसिद्धिं प्राप्तः सकल एव प्रतापः शौर्यख्यातिरूपः रणे संग्रामे निर्वापितः विलोपित इत्यर्थः । यद्वा । महः उत्सवः वैरिजयरूपः स एवाम्बु अम्बुवन्निरन्तरप्रवृत्तिशीलः तत् वहति धारयतीति महाम्बुवाहः । कालकरवालः कृष्णायसखड्गश्चासौ स चेति कर्मधारयः । तमुल्लास्य निपातनायोद्यम्येत्यर्थः । सकल इति सप्तम्यन्तं रणविशेषणमिति केचित् । व्यङ्ग्यपक्षे ( अप्राकरणिकेन्द्रपक्षे ) तु येन देवेन मेघाधिपतिना इन्द्रेण जरठं गम्भीरम् ऊर्जितं यत् गर्जितं गर्जनं तेनोपलक्षितम् । 'छत्रेण राजानमद्राक्षीत्' इतिवदुपलक्षणे तृतीया " इत्थंभूतलक्षणे " ( २।३।२१ ) इति पाणिनिसूत्रात् । कालकरं कृष्णरश्मिं वर्षर्तुकालसूचकं वा वालं ( वबयोरभेदात् ) बालं नवीनमित्यर्थः महाम्बुवाहं मेघम् उल्लास्य प्रकाश्य रणे तेजोविषयजलकोलाहले सति यद्वा अङ्गारादिषु जले पात्यमाने जायमानः शब्दो रणः तस्मिन् सति धाराकृतिभिर्जलैः त्रिभुवने रिपूणाम् अर्थाज्जलशत्रूणां तेजसां सकलः प्रकृष्टः तापः औष्ण्यं निर्वापितः शमित इत्यर्थः । " रवे रणः " इत्यमरः । वसन्ततिलका छन्दः । लक्षणमुक्तं प्राक् ( ६८ पृष्ठे ) ॥

अत्र प्रकरणेन प्रथमार्थेऽभिधाया नियन्त्रणात्तया बोधयितुमशक्यो वस्तुरूपो द्वितीयार्थो व्यङ्ग्य एव । एवं च तयोश्च ( प्रथमद्वितीययोः ) अर्थयोरुपमालंकारोऽपि व्यङ्ग्य एवेत्यलंकारध्वनित्वम् । तदेव दर्शयति **अत्रेत्यादिना** । नन्वेवमर्थयोरसंबन्धे वाक्यभेदः स्यादित्यत आह **वाक्यस्येति** । **असंबद्धार्थाभिधायकत्वं** व्यङ्ग्येन सहासंबद्धो यः प्रकृतो राजा तदभिधायकत्वं तद्बोधकत्वम् । यद्वा । वाक्यस्य विशेषणादिविशिष्टस्य असंबद्धार्थकत्वम् अविवक्षितार्थकत्वम् तथा सति अपुष्टार्थतापत्तिरिति भावः । **मा प्रसाङ्क्षीदितीति** । मा प्रसक्तं भवत्वितीत्यर्थः । करवालमुल्लास्येत्येतावन्मात्रे वक्तव्ये कालेत्यादिविशेषणादिपदप्रयोगो निरर्थक इति असंबद्धार्थकत्वप्रसक्तिरिति भावः । **प्राकरणिकाप्राकरणिकयोः** राजेन्द्रयोः **उपमानोपमेयभावः** सादृश्याख्यसंबन्धः । **कल्पनीयः** निर्णेतव्यः । **इति** हेतोः । **अत्र** काव्ये । **उपमालंकार इति** । प्राधान्येनेति शेषः । **व्यङ्ग्य इति** । इति व्यवहर्तव्य इति शेषः ॥

तदेतदुक्तं प्रदीपोद्द्योतयोः । " अत्र ' करवालमुल्लास्य ' एतावन्मात्रे वक्तव्ये यदेतादृशशब्दप्रयोगस्तस्यासंबद्धार्थकता मा प्रसज्यतामित्यप्राकरणिकैन्द्रवारिवाहादिभिः प्राकरणिकानां राजकरवालादीनामुपमानोपमेयभावे कवेस्तात्पर्यमित्युपमालंकारो व्यङ्ग्यः । स च शब्दशक्तिमूलकः । पर्यायान्तरेण भूपादिना तदर्थोपस्थितौ तदप्रतीतेः । एवमग्रेऽप्यूह्यम् " इति प्रदीपः । " अत्र व्यङ्ग्यार्थाभिन्नत्वेनाध्यवसितश्लिष्टशब्दोपात्तविशेषणकृतं सादृश्यं प्रतीयते । उक्तयुक्तेः । परं तु द्वितीयार्थप्रतीतिमन्तरा

---

१ कर्मधारय इति । मयूरव्यंसकादित्वादिति भावः ॥

तिग्मरुचिरप्रतापो विधुरनिशाकृद्विभो मधुरलीलः ।
मतिमानतत्त्ववृत्तिः प्रतिपदपक्षाग्रणीर्विभाति भवान् ॥ ५५ ॥
अत्रैकैकस्य पदस्य द्विपदत्वे विरोधाभासः ।

---

नोपमावगमः । तदवगमे च शब्दशक्तिर्मूलमिति तद्व्यपदेशः । यद्यप्युपमानभूतद्वितीयार्थस्य वस्तुभूतस्यापि व्यङ्ग्यत्वमस्ति तथाप्युपमानमुखेनैव तेषामुपमेयोत्कर्षकत्वादलंकारध्वनित्वम् । प्रकरणेनाभिधानियमनात् श्लिष्टशब्दोपात्तद्वितीयार्थस्यापि व्यङ्ग्यत्वमेवेति भावः । तदुक्तम् प्राकरणिकेति । ननु नृपमहेन्द्रादेः रूपकमेव व्यङ्ग्यमस्तु एवं च करवाल एव महाम्बुवाह इत्यर्थसाम्राज्यात्तद्व्याख्यानक्लेशोऽपि नेति चेन्न । प्रकरणाद्वर्ण्यस्य राज्ञः प्रतीतिः । श्लिष्टशब्दमहिम्ना देवेन्द्रस्यापि प्रतीतौ परस्परं तयोरसंबन्धे वाक्यभेदापत्त्या द्वितीयार्थस्य वर्णनीयोत्कर्षानाधायकत्वे तादृशशब्दविन्यासरूपकविप्रयासानर्थक्यापत्त्या चाङ्गाङ्गिभावः कल्प्यः । तत्रेन्द्रसंबन्ध्यम्बुवाहस्य राजसंबन्धिकरवालं प्रति विशेष्यत्वादिन्द्रस्यापि राजविशेष्यत्वापत्त्या राजैव महेन्द्र इत्यर्थप्राप्तावविवक्षितमहेन्द्रप्राधान्यात्तद्रतेरेव व्यङ्ग्यत्वापत्तावसंबद्धार्थकत्वं तदवस्थमेव स्यात् । उपमायां तु महेन्द्र इव राजेत्यर्थे राजगतोत्कर्षप्राप्त्या तद्गतरतिलाभरूपेष्टसिद्धिः । यद्वा । रूपकस्यापि सादृश्यमूलकत्वात्प्रथमोपस्थितसादृश्यस्यैव संबन्धत्वमित्यभिप्रायः" इत्युद्योतः । अत्रेदं बोध्यम् । यत्रैकस्य प्राकरणिकत्वं तत्रैवास्य विषयः यत्र तु उभयोरपि प्राकरणिकत्वाद्यनियमस्तत्र श्लेष इति । प्रतिपादितं चेदं प्राक् ( ६९ पृष्ठे ) ॥

ननु समासोक्तिवदुपमायाः प्रकृतोपस्कारकतयापराङ्गत्वरूपगुणीभूतव्यङ्ग्यत्वापत्तिरिति चेन्न । तत्र व्यङ्ग्यस्याप्रस्तुतवृत्तान्तस्य प्राधान्येन प्रतीतौ चमत्कृत्यभावेन गुणीभावेऽप्यत्रोपमायाः प्राधान्यसंभवेन गुणत्वानङ्गीकारादिति प्रभायाम् । चक्रवर्त्यादयस्तु महाम्बुवाहमिव कालकरवालम् तमिव च महाम्बुवाहमिति पक्षद्वये ( वाच्यपक्षे व्यङ्ग्यपक्षे च ) क्रमेणोपमितसमासाङ्गीकारेणार्थ इत्याहुः । तन्न युक्तम् । कालकरवालेत्यादेः परिवृत्तिसहत्वेन तदंशे शब्दशक्तिमूलत्वानुपपत्तेः । कालकरवाल एव महाम्बुवाहो मेघ इति रूपकं त्वसंगतमेव । तथा सत्युत्तरपदार्थस्य मेघस्य प्राधान्यापत्त्या तदुल्लासकत्वस्य राज्ञि इन्द्रारोपं विनासंगतत्वापत्तेः । एतदर्थं व्यङ्ग्यत्वाङ्गीकारे च तस्य वाच्यसिद्ध्यङ्गत्वेन ध्वनित्वानुपपत्तेरिति सुधासागरे ॥

इत्थमुपमालंकारध्वनिमुदाहृत्यैवमलंकारान्तराणि व्यङ्ग्यानि बोध्यानीति ध्वनयन् विरोधाभासालंकारध्वनिमुदाहरति **तिग्मरुचिरेति** । हे विभो स्वामिन् भवान् विभाति शोभते इत्यन्वयः । कीदृशः । ( खलेषु ) तिग्मः तीक्ष्णः ( सुजनेषु ) रुचिरो मनोहरः प्रतापो दण्डादिजनितं तेजो यस्य सः । तथा विधुराणां शत्रूणां निशेव निशा मरणं तत्कर्ता । तथा मधुरा मनोज्ञा लीला चेष्टा यस्य सः । मतिः शास्त्रादितात्पर्यनिर्णायिका बुद्धिः मानश्चित्तसमुन्नतिः तयोः तत्त्वेन याथार्थ्येन सारेण वा वृत्तिर्वर्तनं यस्य सः । यद्वा । मतिः वस्तुतत्त्वावधारणक्षमा बुद्धिः मानं प्रमाणं ताभ्यां तत्त्वे याथार्थ्ये वृत्तिरनुसरणं यस्य सः । प्रतिपदं प्रतिस्थानं पक्षाणाम् आत्मीयानाम् अग्रणीः अग्रेसर इति प्रस्तुतपक्षे ( अविरोधपक्षे ) अर्थः । अत्र पदभङ्गेन विरोधः । तथा हि । तिग्मः तीक्ष्णः अथ च रुचिरः यद्वा तिग्मरुचिः सूर्यः अथ च अप्रतापः प्रतापरहितः ( अनुष्णः ) । विधुः चन्द्रः अथ च अनिशाकृत् रात्रिकृत् न । विभः दीप्तिरहितः अथ च विभाति दीप्यते । मधुर्वसन्तः अथ च अलीलः क्रीडाशून्यः । मतिमान् प्रशस्तबुद्धिः अथ च अतत्त्ववृत्तिः तत्त्वे ब्रह्मणि न वर्तते । यद्वा । अतत्त्वे अवस्तुभूते विषये वृत्तिर्व्यवसायो यस्य तादृशः ।

**अमितः समितः प्राप्तैरुत्कर्षैर्हर्षद प्रभो।**

**अहितः सहितः साधुयशोभिरसतामसि ॥ ५६ ॥**

**अत्रापि विरोधाभासः।**

---

प्रतिपत् प्रथमा तिथिः अथ च अपक्षाग्रणीः पक्षस्यादिभूता नेति विरोधाभासो व्यङ्ग्यः। गीतिश्छन्दः। लक्षणमुक्तं प्राक् ( ४ पृष्ठे )।

अत्रैकपदत्वेन प्रकृतेऽर्थे ज्ञाते द्विपदत्वानुसंधाने विरोधाभासो व्यङ्ग्य इत्यलंकारध्वनित्वम्। तदेवाह **अत्रेत्यादिना**। **एकैकस्येति**। 'तिग्मरुचिरप्रतापः' इत्यादिरूपस्य। **द्विपदत्वे** तिग्मरुचिः अप्रताप इत्यादिरूपे। ज्ञाते इति शेषः। **विरोधाभास इति**। प्राधान्येन व्यङ्ग्य इति शेषः। अत्र सामाजिकानुसंधानमेव द्विपदत्वज्ञानोपायोऽस्तु तथापि 'मृणालवलयादि दवदहनराशिः' इति ४८१ उदाहरणवद्विरोधस्य वाच्यतैव भवितुमर्हति तस्मादेकैकस्य पदस्य द्विपदत्वे वाच्यो विरोधाभास एकैकस्य पदस्य व्यङ्ग्य इत्यध्याहारः कर्तव्य इति केचित्। अपिशब्दाद्यभावे विरोधो व्यङ्ग्य इत्यन्ये। वस्तुतस्तु सहृदयानां वासनाबलात् द्विपदत्वज्ञानेऽपि प्रकरणादिनाभिधायाः प्रथमेऽर्थे नियमनात् अप्रकृततया द्वितीयार्थस्य तत्संबद्धविरोधस्य च व्यङ्ग्यत्वमक्षतमिति बोध्यमित्युद्द्योतादौ स्पष्टम्॥

एवं सभङ्गे पदे विरोधाभासालंकारध्वनिमुदाहृत्याभङ्गेऽपि पदे विरोधाभासालंकारध्वनिमुदाहरति **अमित इति**। शत्रुमित्रयोर्हर्षं द्यति खण्डयति ददाति चेति हे हर्षद शत्रुहर्षखण्डक मित्रहर्षदायक प्रभो स्वामिन् त्वं समितः संग्रामात् प्राप्तैः उत्कर्षैः अमितः अपरिच्छिन्नः ( परिच्छिन्नत्वरहितः ) असतां खलानाम् अहितः दण्डविधायकत्वेन शत्रुः अत एव साधुभिः उत्कृष्टैः यशोभिः सहितः युक्तः असीति प्रस्तुतपक्षेऽर्थः। अत्र पदाभङ्गेऽपि विरोधः। तथाहि। अमितः परिमाणशून्यः अथ च समितः परिमाणसहितः। यद्वा। अमितः मितं मानं तद्रहितः अथ च समितः मानसहितः। अहितः हितरहितः सहितः हितसहित इति। श्लोकश्छन्दः। लक्षणमुक्तं प्राक् ( ११ पृष्ठे )॥

अत्रापि प्रकरणादिना प्रथमार्थेऽभिधायाः नियमनेनाप्रकृतत्वात् द्वितीयार्थस्य विरोधो व्यङ्ग्य एवेत्यलंकारध्वनित्वम्। तदेवाह **अत्रापीति**। भिन्नपदत्वेऽपि अप्रकृतत्वेनेति शेषः। **विरोधाभास इति**। प्राधान्येन व्यङ्ग्य इति शेषः॥

"ननु विरोधस्य किं सर्वत्र व्यङ्ग्यत्वमेव। नेत्युच्यते। तत्कियती सीमा। अपिशब्दादेर्विरोधव्यञ्जकस्य भावे वाच्यत्वम् तदभावे व्यङ्ग्यत्वमिति" इति प्रदीपः। अत्र प्रभा ( ननु द्वितीयार्थस्याप्रकृतत्वेन विरोधस्य व्यङ्ग्यत्वे सर्वत्रैव तदापत्तिरिति न क्वापि तस्य वाच्यता स्यादित्याशयेन शङ्कते **ननु विरोधस्येति**। **सीमा** मर्यादा। कियत्युक्ते वाच्यता कियति चोक्ते व्यङ्ग्यतेति व्यवस्थेत्यर्थः। **अपीति**। द्योतकसत्त्वे स्फुटप्रतीतेर्वाच्यायमानतया वाच्यत्वमेव व्यवह्रियते। अन्यथा तु व्यङ्ग्यतेत्यर्थः ) इति। अत्रोद्द्योतोऽपि ( **विरोधव्यञ्जकस्येति**। एतेन निपातानां द्योतकत्वं ध्वनयति। **भावे वाच्यत्वमिति**। स्फुटद्योतितस्य विरोधस्य तदाक्षिप्तद्वितीयार्थस्य च वाच्यकल्पत्वादिति भावः। **व्यङ्ग्यत्वमिति**। द्वयमपि सामानाधिकरण्यसत्त्वे एवेत्यपि बोध्यम्। शनिरशनिश्चेत्यत्रत्यप्रदीपस्वरसात्। अन्ये तु सामानाधिकरण्यमपि वाच्यत्वे एव नियामकमित्याहुः ) इति। वस्तुतस्तु "अप्रकृतत्वात् द्वितीयार्थस्य विरोधो व्यङ्ग्य एव" इत्युद्द्योतसिद्धान्तः प्रागत्रैवोपर्यावेदित एवेत्यलं मुहुर्मुहुरुद्घाटनेन। एवं च दशमोल्लासे वक्ष्यमाणे 'मृणालवलयादि दवदहनराशिः' इत्यादौ

**निरुपादानसंभारमभित्तावेव तन्वते ।**
**जगच्चित्रं नमस्तस्मै कलाश्लाघ्याय शूलिने ॥ ५७ ॥**

**अत्र व्यतिरेकः ।**

**अलंकार्यस्यापि ब्राह्मणभ्रमणन्यायेनालंकारता ।**

---

( ४८१ उदाहरणे ) अपिशब्दाद्यभावेऽपि विरोधाभासो वाच्य एव । प्रकृतार्थ( वाच्यार्थ )-संबद्धत्वादिति मन्तव्यम् । प्रतिपादयिष्यते चैवमेव १६६ सूत्रे इति बोध्यम् ॥

व्यतिरेकालंकारध्वनिमुदाहरति **निरुपादानेति** । काश्मीरिकनारायणभट्टप्रणीते स्तवचिन्तामणौ पद्यमिदमिति वदन्ति । शूलिने महादेवाय नम इत्यन्वयः । कीदृशाय । निर्गतः रहितः उपादानस्योपकरणस्य ( तूलिकादेः ) संभारः संपत्तिः समूहो वा यत्र तद्यथा स्यात्तथा अभित्तावेव शून्ये एव चित्रं नानाकारं जगत् तन्वते विस्तारयते कुर्वते इति यावत् तस्मै अनिर्वचनीयस्वरूपाय कला चन्द्रस्य षोडशो भागः तया श्लाघ्यायेति प्रकृतोऽर्थः । व्यञ्जनया तु चित्रम् आलेख्यम् कला आलेख्यक्रियाकौशलम् । एवं चात्र व्यञ्जनया चित्रकलाशब्दाभ्यामालेख्यतत्प्रावीण्योपस्थित्या मषीतूलिकाद्युपादानैर्भित्तावालेख्यकारिभ्यः कलावद्भ्यः शूलिन उत्कर्षः प्रतीयते इति व्यतिरेकालंकारो व्यङ्ग्यः । तस्य च चित्रकलाशब्दयोः परिवृत्त्यसहत्वेन शब्दशक्तिमूलता । तदुक्तमुद्द्योते " अप्रकृततया व्यङ्ग्येनालेख्येनानुभावेन व्यङ्ग्यात्स्वकर्तुरप्रकृतात् शूलिनो व्यतिरेको व्यङ्ग्य एवेति भावः । न चास्य ( व्यङ्ग्यस्य ) कविगतशिवविषयरतिं प्रति गुणत्वम् । वाच्यापेक्षया प्राधान्यमात्रेण तद्ध्वनित्वाक्षतेः " इति । शिष्यबुद्धिवैशद्याय बहूदाहृतमिति बोध्यम् ॥

ननूदाहृतेषूपमादीनां व्यङ्ग्यानां प्राधान्येनालंकार्याणां कथमलंकारकत्वमित्यत आह **अलंकार्यस्यापीत्यादि** । **ब्राह्मणश्रमणेति** । श्रमणो बौद्धसंन्यासी । यथा तस्याशास्त्रीयविधिना त्यक्तशिखासूत्रादेस्त्यक्तनित्यादिकर्मणश्च तदानीं ब्राह्मणत्वाभावेऽपि पूर्वकालिकब्राह्मणत्वमादाय ब्राह्मणत्वव्यवहारस्तथालंकार्यस्यापि व्यङ्ग्यतादशायामलंकारत्वाभावेऽपि वाच्यतादशायां विद्यमानमलंकारत्वमादायालंकारत्वव्यपदेश इत्यर्थः ॥

तदुक्तं प्रदीपे । " ननूदाहृतेषूपमादीनां प्राधान्यं न वा । आद्ये कुतस्तेषामलंकारत्वम् । अन्यानलंकरणात् । द्वितीये कुतोऽस्य काव्यस्य ध्वनित्वं व्यङ्ग्यस्याप्राधान्यादिति चेन्न । पूर्वं ( वाच्यतादशायां ) अयमलंकार आसीदित्येतावतालंकारव्यपदेशात् । यथा ब्राह्मणपूर्वबौद्धसंन्यासिनि ब्राह्मणव्यपदेशः । नन्वेवं व्यपदेशसमर्थनेऽप्यलंकारध्वनित्वं न समर्थितमिति चेन्न । अलंकारपदेन[1] तद्योग्यताया[2] विवक्षितत्वात् । न[3] चैवं रसादिध्वनावप्यलंकारध्वनित्वप्रसङ्गः । संलक्ष्यक्रमस्यैव तादृशस्य ( कदाचिदलंकारस्य ) तथा ( अलंकारध्वनिव्यपदेश्यतया ) अभिप्रेतत्वात् । वस्तुतस्तु[4] प्राधान्याप्राधान्ये व्यङ्ग्यस्य वाच्यापेक्षयैव । न तु रसापेक्षयापि तदपेक्षया सर्वत्र गुणीभावात् । तथा चोपमादीनां रसाङ्गतयालंकारत्वं वाच्यापेक्षया प्राधान्यं चेति न दोषलेशावकाशः " इति ॥

---

१ अलंकारपदेन अलंकारध्वनिशब्दगतेन ॥ २ तद्योग्यतायाः अलंकारजातीयरूपायाः ॥ ३ न चैवमिति । तत्रापि रसवदलंकारसजातीयत्वसत्त्वादिति भावः । यद्वा । तेषामपि रसवदाद्यलंकारत्वयोग्यत्वादिति भावः ॥ ४ वस्तुतस्त्वित्यत्र ' एवं च ' इति पाठः क्वचिद्दृश्यते ॥

वस्तुमात्रं यथा

**पंथिअ ण एत्थ सत्थरमत्थि मणं पत्थरत्थले गामे ।**
**उण्णअपओहरं पेक्खिऊण जइ वससि ता वससु ॥ ५८ ॥**

**अत्र यद्युपभोगक्षमोऽसि तदा आस्स्वेति व्यज्यते ।**

---

एवमलंकारध्वनिम् ( शब्दशक्तिमूलकम् ) उदाहृत्य इदानीं वस्तुध्वनिम् ( शब्दशक्तिमूलकम् ) उदाहरति **पंथिअ इति** । स्वयंदूती " द्व्यर्थैः पदैः पिशुनयेच्च[1] रहस्यवस्तु " इति कामशास्त्रमनुसृत्य पथिकं प्रति द्व्यर्थैः पदैराच्छाद्य रहस्यं कथयति । " पथिक नात्र स्रस्तरमस्ति मनाक् प्रस्तरस्थले ग्रामे । उन्नतपयोधरं प्रेक्ष्य यदि वससि तदा वस ॥ " इति संस्कृतम् । हे पथिक प्रस्तराणां पाषाणानां स्थले तन्मये अत्रास्मिन् ग्रामे न तु नगरे मनाक् अल्पमपि स्रस्तरं कटाद्यास्तरणं नास्ति । पाषाणबाहुल्येन तृणदुर्लभतासूचनम् । तस्माच्छयनसामग्र्यभावेऽपि उन्नतपयोधरं वार्षुकं जलदं मेघं प्रेक्ष्य दृष्ट्वा यदि ( तत्प्रतिबन्धात् ) वससि तदा वस न तु विश्रामार्होऽयं ग्राम इत्यापाततो यथाश्रुतो वक्त्र्यभिप्रायः । व्यङ्ग्यार्थस्तु पाषाणानां तत्त्वेनाध्यवसितानां मूर्खाणां स्थले तन्मये अत्र ग्रामे सत्थरं शास्त्रं यद्वा सत्थरं शास्त्रं कामशास्त्रमित्यर्थः । मनाक् ईषदपि नास्ति किं पुनः साहित्यम् । तस्मादाकारेङ्गिताद्यभिज्ञविरहान्निःशङ्कतया उन्नतम् अनुपभुक्तं पयोधरं स्तनं तादृशोद्दीपनं मेघं च प्रेक्ष्य यदि वससि उपभोगक्षमोऽसि तदा वस आस्स्वेति । प्रस्तरस्थले इत्यनेन शय्यापेक्षापि नास्तीति ध्वन्यते । जघनविपुला छन्दः । उक्तं च वृत्तरत्नाकरे " संलङ्घ्य गणत्रयमादिमं शकलयोर्द्वयोर्भवति पादः । यस्यास्[2]तां पिङ्गलनागो विपुलामिति समाख्याति " इति । इयं विपुला चपलावन्मुखजघनभेदभिन्ना भवति । प्रथमेऽर्धे मुखविपुला उत्तरार्धे जघनविपुलेति व्याख्यातारः । तथा च पिङ्गलसूत्रम् " विपुलान्या " ( ४ अ० २३ सू० ) इति । यस्या आर्याया अन्त्येऽर्धे आद्ये वा उभयोर्वा त्रिषु गणेषु पादो न विश्राम्यति सा आर्या विपुलेति तदर्थः ॥

अत्र वस्तुरूपं व्यङ्ग्यं दर्शयति **अत्र यदीत्यादि । आस्स्वेतीति** । वस्त्विति शेषः । **व्यज्यते इति** । अत्र शास्त्राभावादाकारेङ्गितज्ञानधिकरणे ग्रामे सति चैवंविधे उद्दीपने मेघे श्लेषमर्यादया उन्नतस्तनदर्शने च को नाम उपभोगक्षमोऽन्यत्र गन्तुमर्हतीति वक्त्र्यभिप्रायो व्यञ्जनया प्रकाशते इत्यर्थः । तच्च पओहरसत्थरशब्दयोः परिवृत्त्यसहत्वाच्छब्दशक्तिमूलमिति शब्दशक्तिमूलो वस्तुध्वनिरयमिति भावः । सत्थरं शास्त्रमास्तरणं च । शास्त्राभावोन्नतमेघस्तनादिदर्शनहेतुकतदावसेत्यादिगम्यायां गतिनिवृत्तौ शब्दान्वयाद्यनुविधानस्य स्फुटत्वात् । एतेन कुलजोक्तावुक्तार्थानवभासात् वक्तृप्रतिपाद्यौचित्याद्यपेक्षणेन नास्य केवलशब्दशक्तिमूलत्वम् अर्थव्यञ्जकतायामेव तेषां सहकारित्वोक्तेरिति परास्तम् । अर्थव्यञ्जकतायां तेषामावश्यकत्वमात्रं न तु शब्दव्यञ्जनायां सर्वथानुपयोगस्तत्र प्रतिपादितो मानाभावात् । अत एव गुर्वादिप्रयुक्तात् ' सुरभि मांसं भुङ्क्ते ' इत्यादितो न द्वितीयार्थप्रतीतिः । अस्ति हि शब्दव्यञ्जना क्वचित् तत्साहाय्येन विनापीत्यन्यदेतत् । न चात्र पयोधरादिपदादुपस्थितार्थद्वयस्य परस्परमसंबन्धाद्वाक्यभेदापत्तिः । इष्टत्वात् । न च वाच्यव्यङ्ग्ययोरसंबन्धेऽसंबद्धार्थकत्वापत्तिरिति वाच्यम् । ग्राम्यतापरिहाराय संगोपनाय च वाच्यार्थाच्छादितव्यङ्ग्यार्थस्य प्रतिपाद्यतयाच्छाद्याच्छादकरूपसंबन्धस्य विवक्षितस्य

---

१ पिशुनयत् सूचयेत् ॥ २ यस्याः आर्यायाः ॥

**शनिरशनिश्च तमुच्चैर्निहन्ति कुप्यसि नरेन्द्र यस्मै त्वम् ।**
**यत्र प्रसीदसि पुनः स भात्युदारोऽनुदारश्च ॥ ५९ ॥**

**अविरुद्धावपि त्वदनुवर्तनार्थमेकं कार्यं कुरुत इति ध्वन्यते ।**

**( सू० ५४ ) अर्थशक्त्युद्भवोऽप्यर्थो व्यञ्जकः संभवी स्वतः ॥ ३९ ॥**
**प्रौढोक्तिमात्रात्सिद्धो वा कवेः तेनोम्भितस्य वा ।**

---

सत्त्वेनाक्षतेरित्युद्द्योते स्पष्टम् । सारबोधिनीकारास्तु न च वाच्यव्यङ्ग्ययोरसंबन्धे वाक्यभेदः स्यादिति वाच्यम् आच्छाद्याच्छादकभावस्यैव संबन्धत्वात् । अत्र वाच्यमभिभूयैव व्यङ्ग्यस्य स्थितत्वात् न तयोरुपमानोपमेयभावः संबन्धः । द्वयोः समप्राधान्ये एव तदवकाशादित्याहुः । एवं चात्र नालंकारो व्यङ्ग्यः किंतु वस्त्वेवेति तदाशयः । अत्र श्लिष्टशब्दानां बहुत्वाद्वाक्यत्वे वाक्यप्रकाश्यत्वम् ॥

संस्कृते ( शब्दशक्तिमूलं ) वस्तुध्वनिमुदाहरति **शनिरिति** । हे नरेन्द्र त्वं यस्मै कुप्यसि तं शनिः शनिग्रहः अशनिः वज्रं च उच्चैः अतिशयेन निहन्ति । पुनःशब्दस्त्वर्थे । यत्र तु प्रसीदसि सः पुरुषः उदार उद्भटः दाता वा महान् " उदारो दातृमहतोः " इत्यमरात् अनुदारः अनुगता दारा वनिता यस्य सः ( त्वद्दत्तैश्वर्येणाप्रवासात् ) तथाभूतश्च भातीत्यर्थः । यद्वा । न विद्यते उदारो यस्मात्तथाभूतश्चेत्यर्थः । पक्षे अशनिः शनिविरोधी । नञोऽसुन्दरादाविव विरोध्यर्थकत्वात् । अनुदारः उदारादन्यः । इतरत्सर्वं प्राग्वत् । आर्या छन्दः । लक्षणमुक्तं प्राक् ( ४ पृष्ठे ) ॥

अत्र पूर्वार्धे नञो विरोध्यर्थकत्वेनाशनिपदात् शनिविरोधिरूपार्थस्यावगतौ ' विरुद्धावपि त्वदनुवर्तनार्थमेकं कार्यं कुरुतः ' इति वस्तु ध्वन्यते इति वस्तुध्वनिः । न तूत्तरार्धेऽपि । तत्रैककार्यकरणाप्रतीतेः । किं तूत्तरार्धे विरोधालंकारध्वनिरेवेति बोध्यम् । तदेवाह **अत्र विरुद्धावपीत्यादि कुरुत इतीति** । वस्त्विति शेषः । उक्तं च प्रदीपे । " अत्र प्रथमार्धे शनिरशनिश्चेत्यनेन ' विरुद्धावपि त्वदनुवर्तनार्थमेकं कार्यं कुरुतः ' इति वस्तु ध्वन्यते । न तु विरोधालंकारः शनिरशनिरित्यनयोः सामानाधिकरण्याभावात् । विरोधस्य च तत्रैव विश्रान्तेः । द्वितीयार्धं तु नोदाहरणम् । तत्र च शब्दस्य (चकारस्य) अप्यर्थत्वे विरोधस्य वाच्यत्वात् । समुच्चयमात्रार्थत्वे तु विरोधस्यैव व्यङ्ग्यत्वात् " इति । अत्रोद्द्योतः ( **सामानाधिकरण्याभावादिति** । एकधर्मिगतत्वेन शनित्वतद्भिन्नत्वयोरप्रतिपादनादिति भावः । नञो भिन्नार्थत्वे एव विरोध इत्यपि बोध्यम् ) इति ॥

इत्थं शब्दशक्तिमूलं द्विविधं ध्वनिं निरूप्य इदानीमर्थशक्तिमूलत्वम् अनुरणनरूपव्यङ्ग्यं द्वादशविधत्वेन विभजते **अर्थशक्त्युद्भवोऽपीति** । ध्वनाविति शेषः । अपिरयं भिन्नक्रमेणान्वेति । यत् येन हेतुना व्यञ्जकः अर्थोऽपि स्वतःसंभवी लोकेऽपि दृष्टः कवेः काव्यकर्तुः प्रौढोक्तिमात्रात् सिद्धः । प्रौढोक्तिः चमत्कारानुगुणोक्तिः । मात्रपदेन बहिः ( लोके ) संभववारणम् । तथा च लोकेऽदृष्टोऽपि कविप्रतिभा-

---

१ उद्द्योतपुस्तकान्तरे तु अयं पाठः । सत्थरं शास्त्रमास्तरणं च । शास्त्राभावोन्नतमेघस्तनादिदर्शनहेतुकतावसेत्यादिगम्यायां गतिनिवृत्तौ शब्दान्वयाद्यनुविधानस्य स्फुटत्वात् । वक्तृवैशिष्ट्यादेः शब्दशक्तिमूलेऽपि क्वचित्सहकारित्वात् । अत्र पयोधरादिपदादुपस्थितार्थद्वयस्य ग्राम्यतापरिहाराय संगोपनाय च वाच्यार्थाच्छादितव्यङ्ग्यार्थस्य प्रतिपाद्यतयाच्छाद्याच्छादकरूपसंबन्धस्य विवक्षितस्य सत्त्वेन नासंबद्धार्थता । वाक्यभेदस्त्विष्ट एवेति ॥

२ तदुक्तम् " तत्सादृश्यं तदन्यत्वं तदल्पत्वं विरोधिता । अप्राशस्त्यमभावश्च नञर्थाः षट् प्रकीर्तिताः ॥ " इति ॥

३ संभववारणमित्यस्यानन्तरम् ' व्यङ्ग्यस्य स्वतःसंभविनोऽचमत्कारित्वात्तत्कृता भेदा नोक्ता इति बोध्यम् ' इति उद्द्योतपुस्तकान्तरे पाठः ॥

**वस्तु वालंकृतिर्वेति षड्भेदोऽसौ व्यनक्ति यत् ॥ ४० ॥**

**वस्त्वलंकारमथ वा तेनायं द्वादशात्मकः ।**

**स्वतःसंभवी न केवलं भणितिमात्रनिष्पन्नो यावद्बहिरप्यौचित्येन संभाव्यमानः । कविना प्रतिभामात्रेण बहिरसन्नपि निर्मितः कविनिबद्धेन वक्त्रेति वा द्विविधोऽपर इति त्रिविधः । वस्तु वालंकारो वासाविति षोढा व्यञ्जकः । तस्य वस्तु वालंकारो वा व्यङ्ग्य इति द्वादशभेदोऽर्थशक्त्युद्भवो ध्वनिः । क्रमेणोदाहरणम् ।**

**अलसशिरोमणि धुत्ताणं अग्गिमो पुत्ति धणसमिद्धिमओ ।**

**इअ भणिएण णअङ्गी पप्फुल्लविलोअणा जाआ ॥ ६० ॥**

---

मात्रेण कल्पित इत्यर्थः ( यथाकीर्त्यादेर्धावल्यादिः ) । तेन कविना उम्भितस्य पूरितस्य वर्णनया उम्भितस्य नायकादेरित्यर्थः । 'उम उम्भ पूरणे' इति धात्वनुसारात् । कविनिबद्धस्य नायकादेरिति यावत् । प्रौढोक्तिमात्रात् सिद्ध इत्यनुषज्यते । इति त्रिविधः । सोऽपि वस्तुरूपो वालंकृतिरूपो वेति षड्भेदः षड्विधः । असौ षड्विधोऽपि वस्तुमात्रम् अथवा अलंकारं व्यनक्ति व्यञ्जयति तेन हेतुना अयम् अर्थशक्त्युद्भवः अर्थशक्तिमूलो ध्वनिः द्वादशात्मकः द्वादशविध इति सूत्रार्थः ॥

तमेव सूत्रार्थमाह **स्वतःसंभवीत्यादि** । **भणितिमात्रनिष्पन्न इति** । भणितिमात्रेण प्रौढोक्तिमात्रेण निष्पन्नः कल्पित इत्यर्थः । अत्यन्तासत्यप्यर्थे शब्दस्य ज्ञानजनकत्वात् । "अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि" इति न्यायादिति भावः । **बहिरपि** लोकेऽपि । **औचित्येन** योग्यतया । **प्रतिभेति** । नवनवोन्मेषशालिनी प्रज्ञेत्यर्थः । **असन्नपि** अविद्यमानोऽपि । **निर्मितः** कल्पितः । तेनोम्भितस्य वेति व्याचष्टे **कविनिबद्धेनेत्यादि** । **वक्त्रेति** । नायकादिरूपेणेत्यर्थः । 'प्रतिभामात्रेण बहिरसन्नपि निर्मितः' इति अत्राप्यनुषज्यते । वृद्धोक्तिविषयाच्छिशूक्तिविषय इव कव्युक्तिविषयात्तन्निबद्धोक्तिविषयोऽधिकतररागप्रकटकत्वेनाधिकचमत्कारीति द्वयोर्भेदः । अन्यथा कविनिबद्धभणितिनिष्पन्नः कविभणितिनिष्पन्न एवेति स्वतःसंभवित्वं प्रौढोक्तिनिष्पन्नत्वं चेति द्वैरूप्यमेव विदध्यात् । इतःपरं च प्रणिधानप्रतीतिकतया चमत्कारस्य स्थगनान्न कविनिबद्धनिबद्धवक्त्रादेः पृथग्गणनमित्युद्द्योतादौ स्पष्टम् । एतेन "कवितदुम्भितवक्तृप्रौढोक्तिनिष्पन्नयोरर्थयोर्न पृथग्भावेन गणनोचिता । उम्भितोम्भितादेरपि भेदान्तरप्रयोजकतापत्तेः" इति रसगङ्गाधरोक्तमपास्तम् । तदेवाह **द्विविधोऽपर इति त्रिविध इति** । **षोढा** षड्विधः । **तस्येति** । षड्विधस्य व्यञ्जकस्येवत्यर्थः । द्वादशात्मक इति व्याचष्टे **द्वादशभेद इति** । शेषपूरणलब्धमाह **ध्वनिरिति** ॥

तत्र स्वतःसंभविन्यर्थे चतुर्षु भेदेषु मध्ये स्वतःसंभविना वस्तुना वस्तुनो व्यक्तिमुदाहरति **अलसेति** । विवाहप्रसङ्गे यौवनाक्रान्तकुमारीं प्रत्युपमाता संभावितवरगुणवर्णने सा प्रसन्नाप्रसन्ना वेति कुमारीप्रसूप्रश्नं काचिदुत्तरयतीति सुधासागरकाराः । "अलसशिरोमणिर्धूर्तानामग्रिमः पुत्रि धनसमृद्धिमयः । इति भणितेन नताङ्गी प्रफुल्लविलोचना जाता ॥" इति संस्कृतम् । स्वयंपतिंवरां प्रति धात्र्याः प्ररोचनायोक्तिः पूर्वार्धम् उत्तरार्धं तु कवेर्वाक्यमित्युद्द्योतकृत् । प्रकरणाच्चायमित्यध्याहारः । हे पुत्रि अयं वरः अलसानां निरुद्योगानां शिरोमणिः श्रेष्ठः धूर्तानां चाग्रिमः अग्रगण्यः धनसमृद्धिमयः प्रचुरधनसमृद्धिः ।

अत्र ममैवोपभोग्य इति वस्तुना वस्तु व्यज्यते ।

धन्यासि या कथयसि प्रियसंगमेऽपि विस्रब्धचाटुकशतानि रतान्तरेषु ।

नीवीं प्रति प्रणिहिते तु करे प्रियेण सख्यः शपामि यदि किंचिदपि स्मरामि ॥ ६१ ॥

---

प्राचुर्ये मयट् । इति भणितेन भाषितेन ( लज्जया ) नताङ्गी सा कुमारी प्रफुल्ले हर्षविकसिते विलोचने यस्यास्तादृशी जातेत्यर्थः । अत्र प्रफुल्लविलोचनत्वेन हर्षो व्यज्यते । नताङ्गीत्वेन स्वस्या मानिनीत्वं नमस्कारद्वारा बोध्यते । मुखविपुला छन्दः । लक्षणमुक्तं प्राक् ( १३३ ) पृष्ठे ॥

अत्रालसत्वेन प्रवासे नायिकान्तरगृहे च गन्तुमनिच्छुः धूर्तत्वेन रतिकाले नायिकया दर्श्यमानगुणेष्वनादरवान् संभोगेष्वतृप्तश्च धनसमृद्धिमत्तया कृपणः सुखी चेत्यवधारितवत्याः कुमार्याः हर्षकार्येण प्रफुल्लविलोचनत्वरूपेण वस्तुना अन्यासाम् अनाकर्षणीय इति ' ममैवोपभोग्योऽयं नाविदग्धायाः ' इति वस्तु सामाजिकेषु व्यज्यते । तदेवाह **अत्रे**त्यादि । अत्र वस्तुना प्रफुल्लविलोचनत्वरूपेण ' ममैवोपभोग्यः ' इति वस्तु व्यज्यते इत्यन्वयः । **ममैवेति** । नाविदग्धाया इत्यर्थः । तद्विषयकं च कुमार्याः ज्ञानं तदलसशिरोमणित्वादिश्रवणविशिष्टेन प्रफुल्लनयनत्वेन वस्तुना स्वहेतुहर्षव्यञ्जनद्वारेण तत्करणीभूतं सामाजिकेषु व्यज्यते इत्युद्द्योते स्पष्टम् ॥

स्वतःसंभविना वस्तुनालंकारस्य व्यक्तिमुदाहरति **धन्यासीति** । रतिकथापरासु सखीषु मध्ये रतिकालीनं स्वप्रियालापं कथितवतीं कांचिदुपहसन्त्याः त्वमिदानीं स्वरतिवार्तां कथयेति प्रेरितायाः उक्तिरियम् । विज्जिकायाः[1] पद्यमिदमिति शार्ङ्गधरपद्धतौ स्पष्टम् । हे सखि या (त्वं) प्रियसंगमे रतान्तरेष्वपि रतमध्येष्वपि विस्रब्धानां विश्वासयुक्तानां चाटुकानां प्रियवाक्यानां शतानि कथयसि त्वं धन्यासीत्यन्वयः । प्रथमतः प्रियसंगमे एव विलक्षणानन्दमन्थरतया तत्कथनमशक्यम् तत्रापि रते तत्रापि नादौ नान्ते किं तु मध्ये तस्य च पुनरिदानीं स्मरणमित्याश्चर्यभूतं तव सावधानत्वमिति भावः । भोः सख्यः प्रियेण नीवीं नाभितलवसनग्रन्थिं प्रति करे प्रणिहिते प्रणिधानविषयीकृते नीव्यां करोऽर्पितव्य इति संकल्पविषयीकृते सतीति यावत् न त्वर्पिते इत्यर्थः । अवाचकत्वापत्तेः अभिप्रायस्य लघुत्वापत्तेश्च । यदि किंचिदपि स्मरामि तदा शपामि शपथं करोमीत्यन्वयः । भवतीनां शपथोऽहं तु न किंचिदपि स्मरामीत्यर्थः । किं पुनस्तादृशवाक्यमित्यपिशब्दार्थः । यद्यपि " शप उपलम्भने " इति वार्तिकेनात्मनेपदं प्राप्नोति तथापि शपथकरणकप्रकाशनविवक्षाभावान्न तत्प्रवृत्तिरिति स्पष्टमस्मत्कृतशब्देन्दुशेखरे[2] इत्युद्द्योते स्पष्टम् । सुधासागरकारास्तु " त्वं धन्यासि या प्रियस्य संगमे गाढालिङ्गनादावपि रतान्तरे सुरतमध्येऽपि विश्रब्धमव्यग्रं चाटुकशतानि रिरंसोद्दीपकवाक्यानि कथयसि स्पष्टमुच्चारयसि । करं प्रसार्य सखीस्पर्शरूपशपथपूर्वं स्ववृत्तान्तमावेदयासि अहं तु प्रियेण करे नीवीं प्रति प्रणिहितेऽपि मनसि संकल्पितेऽपीति यावत् किं पुनः संगमादावित्यपिशब्दार्थः । दृढप्रत्ययो-

---

१ ' नीलोत्पलदलश्यामां विज्जिकां मामजानता । वृथैव दण्डिना प्रोक्तं सर्वशुक्ला सरस्वती ॥ ' इति विज्जिकाकृतं पद्यान्तरमप्युपलभ्यते सुभाषितरत्नभाण्डागारे ॥ २ शब्देन्दुशेखरे इति । शप इति । " परे तु ' शप उपलम्भने ' अनेनात्मनेपदम् । भाष्ये उपलम्भन इत्येव पाठदर्शनात् । उपलम्भनं प्रकाशनम् । धातोः शपथकरप्रकाशने वृत्तौ तङ् तात्पर्यग्राहकः । शपथश्च लोकप्रसिद्ध एव । अत एवोदाहरणे देवदत्तायेत्यत्र चतुर्थ्येव भाष्ये प्रयुक्ता । ' सख्यः शपामि यदि किंचिदपि स्मरामि ' इत्यादौ शपथमात्रं विवक्षितं न तु प्रकाशनम् । मूले ( सिद्धान्तकौमुद्यां ) उपालम्भे इति पाठ आक्रोशार्थादित्यादि व्याख्यानं च वृत्तिग्रन्थानुरोधेनेति वदन्ति " इति शब्देन्दुशेखरः ॥

**अत्र त्वमधन्या अहं तु धन्येति व्यतिरेकालंकारः ।**

**दर्पान्धगन्धगजकुम्भकपाटकूटसंक्रान्तिनिघ्नघनशोणितशोणशोचिः ।**
**वीरैर्व्यलोकि युधि कोपकषायकान्तिः कालीकटाक्ष इव यस्य करे कृपाणः ॥ ६२ ॥**

---

त्पादनायाह सख्यः शपामि भवदङ्गं स्पृशामि । अत्र शपथस्यामुख्यत्वादात्मनेपदाभावः" इत्याहुः । अत्र 'यदि किंचिदपि स्मरामि' इति वाक्यमध्ये 'सख्यः शपामि' इति गर्भितमपि गुणः । विवक्षितार्थस्य सत्यत्वप्रत्यायनार्थत्वात् । अत्र पूर्ववाक्ये सोल्लुण्ठोक्ता[2]वेकस्या एव सौभाग्यगर्वितायाः संबोध्यत्वाद्धन्यासीत्येकवचनम् । स्वोत्कर्षसूचने तु बह्वीनां संबोध्यत्वात्सख्य इति बहुवचनमिति नासंगतिरित्युद्द्योते स्पष्टम् । वसन्ततिलका छन्दः । लक्षणमुक्तं प्राक् ( ६८ पृष्ठे ) ॥

अत्र वाच्येन सखीं प्रति धन्यत्वोक्तिरूपेण वस्तुना स्वस्य महानन्दाप्तिसूचनद्वारा 'त्वमधन्या अहं तु धन्या' इति व्यतिरेकालंकारो व्यज्यते । तदेवाह **अत्रेति** । वाच्येन वस्तुनेति शेषः । **व्यतिरेकालंकार इति** । व्यज्यते इति शेषः । तदुक्तमुद्द्योतेऽपि "अत्र च रतकालेऽपि विषयान्तरवेदनेन रागस्य कृत्रिमतामावेदयता चाटुकथनेन त्वमधन्येति व्यज्यते । अन्तरापिशब्दाभ्यामत्यन्तानौचित्यप्रकाशनद्वारा तदतिशयः । एवं रतान्तरेष्विति बहुवचनस्यापि प्रतिरतसमयं तथाभावसूचनद्वारा तद्व्यञ्जकत्वम् । एवं शतानीति प्रातिपदिकवचनयोश्च । तथोत्तरार्धेन प्रियकरस्पर्शमात्रेण संमोहानन्दमन्थरत्वेनाकृत्रिमरागातिशयं विषयान्तरानुभवाभावं च सूचयताहं धन्येति व्यज्यते । तथा चोभयसंवलनेन व्यतिरेकालंकार इति ध्येयम्" इति । ननु व्यञ्जकोऽत्र धन्यासीति त्वत्पदार्थस्य व्यतिरेकालंकार एव । तत्कथं वस्तुव्यञ्जकतोदाहरणमेतदिति चेन्न । संबोध्य[3]व्यतिरेकस्तावन्न वाच्यः आत्म[4]नि कथनाभावस्याशाब्दत्वात् । व्यङ्ग्यस्तु यद्यपि भवत्येव तथापि तमनपेक्ष्यैव[5] वाच्येन वस्तुमात्रेण यथोक्तव्यतिरेकव्यञ्जनादिति प्रदीपः ॥

स्वतःसंभविनालंकारेण वस्तुनो व्यक्तिमुदाहरति **दर्पेति** । यस्य राज्ञः करे स्थितः कृपाणः खड्गः युधि युद्धे वीरैः कोपेन कषाया अतिशयरक्ता कान्तिर्यस्य तादृशः काली दुर्गा तस्याः कटाक्ष इव साधारणभटानां भयप्रदत्वादत्यन्तशूरैरेव व्यलोकि विशेषेण दृष्टः । रक्तत्वसंपादनाय कृपाणं विशिनष्टि दर्पान्धेति । दर्पेण मदेनान्धो मदोद्रिक्तो यो गन्धगजः "यस्य गन्धं समाघ्राय पलायन्ते परे गजाः । तं गन्धहस्तिनं विद्यान्नृपतेर्विजयावहम् ॥" इत्युक्तलक्षणः "स्वेदं मूत्रं पुरीषं च मज्जां चैव मतङ्गजाः । यस्याघ्राय विमाद्यन्ति तं विद्याद्गन्धहस्तिनम् ॥" इत्युक्तलक्षणो वा तस्य कुम्भयोः गण्डस्थलयोः कपाटं ( विशालतया दुर्भेद्यत्वात् ) कपाटमिव मध्यभागः तस्य कूटम् अग्रभागः तदेव ( कठिनत्वात् ) कूटं लोहमुद्गर इव तत्र संक्रान्त्या संबन्धेन पतनेन वा सम्यक्प्रविशनेन वा निघ्नं दृढसंबद्धं घनं निबिडं यत् शोणितं रुधिरं तेन शोणं रक्तं शोचिः कान्तिर्यस्य यत्र वा तादृश इत्यर्थः । वसन्ततिलका छन्दः । लक्षणमुक्तं प्राक् ( ६८ पृष्ठे ) ॥

अत्र कालीकटाक्ष इव कृपाणो व्यलोकीत्युपमा शोणशोचिः कषायकान्त्योर्बिम्बप्रतिबिम्बभावेन समा-

---

१ एवमेवाग्रेऽपि ३२० उदाहरणे स्फुटीभविष्यति ॥ २ साभिप्रायोक्तौ ॥ ३ संबोध्यव्यतिरेक इति । संबोध्यसखीनिष्ठो व्यतिरेक इत्यर्थः ॥ ४ आत्मनीति । अहं न कथयामि त्वं तु कथयसीति व्यतिरेकशरीरम् तत्राहं न कथयामीत्यंशस्यावाच्यत्वाद्व्यङ्ग्य एव संबोध्याया व्यतिरेक इत्यर्थः ॥ ५ अस्तु तस्यैव व्यञ्जकत्वमत आह तमनपेक्ष्यैवेति । कथनेन हि विषयान्तरव्यासङ्गसूचनेन रागानुत्कटत्वद्योतनादधन्यत्वं व्यज्यते प्रियकरस्पर्शमात्रेण विगलितवेद्यान्तरतया स्मरणाभावेन चाहं धन्येति व्यतिरेकप्रतीतिसिद्धौ न व्यङ्ग्यस्य त्वत्पदार्थव्यतिरेकस्य प्रतीक्षेत्यर्थं इति प्रभायां स्पष्टम् ॥

